ॐ श्रीगणेशायनमः ॐ श्री वरुण रूपशिव भृगुच्यवन परशुरामकुल देवेभ्योनमः श्रीकुलदेव्यैनमोनमः

अथब्रह्मनिरूपणम्- ऋग्वेदे मण्डल१० अध्याय ११ सूक्त १२९

नासदासीन्नो सदासीत्तदानीं नासीद्रजोनो व्योमा परोयत्। किमावरीवः कुहकस्यशर्मन्नंभः किमासीद्गहनं गभीरम् ॥१॥

पदार्थः (तदानीं) महाप्रलय काले (असत्) अपरा (न) आसीत् (सत्) जीवः (नो) नैव (आसीत्) (रजः) रजोगुणं (न) (आसीत्) (यत्) (व्योम) तमो गुणं (अपरः) सत्वं (नो) नासीत् (कुह कस्य) इन्द्रजालस्य (शर्मन्) गृहे ब्रह्मण्ड स्योपरि समन्तात् यत् (आवरीवः) आवरकं तत्व समूहं भवति तत् (किं) नकिमप्यासीत्) (गहनं) (गभीरं) गम्भीरं (अंभः किं) (आसीत्) (नकिमप्यासीत् ॥१॥

भाषार्थः

महाप्रलय के समय अपरा नाम माया नहीं थी जीव नहीं था सत्व रज तम नाम तीनों गुण भी नहीं थे इन्द्र जाल रूप ब्रह्माण्ड के चारों ओर जो तत्व समूह का आवरण होता है वह भी नहीं था और गहन गंभीर जल भी नहीं था १

नमृत्युरासीदमृतं नतर्हि न राच्या अह्न आसीत्प्रकेतः। आसीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास २

(तर्हि) (मृत्युः) (न) (आसीत्) (अमृतं) (न) (आसीत्) (राच्याः) (अन्हः) (प्रकेतः) प्रज्ञानं (न) (आसीत्) (अवातं) प्राण रहितं (स्वधया) स्वकीयज्योतीरूप परा शक्त्या (एकं)

अविभागापन्नं (तत्) ब्रह्मैव (आसीत्) (तस्मात्) (ह)
ब्रह्मणः (अन्यत्) (परः) जगत् (किंचन) (न) (आस) २
न मृत्यु था न जीव था दिन रात्रि का प्रज्ञान भी न था पराशक्ति से अभिन्न ब्रह्म ही था उस ब्रह्म से अन्य जगत कुछ भी न था ॥ २॥

इति श्री भृगुवंशावतंस श्री नाथूराम सूनु ज्वालाप्रसाद शर्म्म संगृहीते मूर्त्तिरहस्ये ब्रह्मनिरूपणो नाम प्रथमोऽध्यायः १

## अथ द्वितीयोऽध्यायः

इतः परं पुरुषरूपात्सृष्ट्युत्पत्तिसंभवात्तस्माद्ब्रह्म तया पराशक्त्या महापुरुषरूपो भूत्वेदं सर्वं जनयामास तत्प्रमाणमाह य० अ० ३१

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १॥

यः (पुरुषः) सर्वव्यापी महानारायणः (सहस्रशीर्षा) सर्वात्मरूपत्वादनन्तानि शीर्षाणि यस्य (सहस्राक्षः) अनन्तान्यक्षीणि यस्य (सहस्रपात्) अनन्ताः पादा यस्य (सः) (भूमिं) व्यष्टिसमष्टिदेहरूपं स्थानं (सर्वतः) तिर्यक् ऊर्ध्वमधश्च (स्पृत्वा) व्याप्य (दशाङ्गुलं) नाभेः सकाशाद्दशाङ्गुलपरिमितं देशं हृदयं (अति) अतिक्रम्य (अतिष्ठत्) अन्तर्यामिरूपेण वर्त्तमानः १

## भाषार्थ

सब लोकों में व्याप्त जो महानारायण सर्वात्मा होने से अनन्त शिर नेत्र पादवाला है वह व्यष्टि समष्टि रूप स्थान को तिरछा ऊंचा नीचे व्याप्त करके हृदय को आक्रमण कर अन्तर्यामी रूप से स्थित हुआ ॥ १॥

पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्। उतामृत

त्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

(इदम्)(यत्)(भूतं) अतीतं ब्रह्मसंकल्पजं जगत् (च)(यत्)(भाव्यम्) भविष्यं ब्रह्मसंकल्पजं जगत् (उत) अपि च (यत्) जगत् (अन्नेन) वीजेनान्नपरिणामेन वीर्येण वा (अतिरोहति) वृक्षनरपश्वादिरूपं प्राप्नोति तत् (सर्वं) (अमृतत्वस्य) मोक्षस्य (ईशानः) स्वामी (पुरुषः) महानारायणः (एव) तस्यान्याभावात् ॥ २ ॥

यह जो अतीत ब्रह्म संकल्पज जगत है और जो भविष्य ब्रह्म संकल्पज जगत है और जो जगत वीज वा अन्न परिणाम वीर्य से वृक्ष नर पशु आदि रूप वाला प्रकट होता है वह सब मोक्ष का स्वामी महानारायण ही है उसका अन्य न होने से ॥ २ ॥

एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥

(अस्य) महानारायणस्य (महिमा) विभूतिः (एतावान्) इति न (च) चिदात्मा (पुरुषः) महानारायणः (अतः) संसारात् (ज्यायान्) अतिशयेनाधिकस्तस्मात् (विश्वा) सर्वाणि (भूतानि) ब्रह्माण्डानि (अस्य) (पादः) चतुर्थांशः (दिवि) गोलोके (अस्य) (त्रिपादस्य) स्वरूपं (अमृतं) विनाश रहितं यस्मादनन्तं ब्रह्मैवस्व भागेह्य ज्योतिषा महानारायण रूपो भवत् ॥ ३ ॥

इस महानारायण की विभूति इतनी है यह नहीं चिदात्मा महानारायण इस संसार से अतिशय अधिक है जिस कारण सब ब्रह्मांड इस महानारायण का चतुर्थांश है गो लोक में इसका त्रिपाद स्वरूप विनाश रहित है क्योंकि

अनन्त ब्रह्म ही अपने अंश में अपनी ज्योति द्वारा महा नारायण रूप हुआ ३

त्रिपादूर्ध्वउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ततो
विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

(त्रिपाद्) (पुरुषः) महा नारायणः (ऊर्ध्वः) ब्रह्माण्डादूर्ध्वं (उदैत्) उत्कर्षेणास्थितवान् (पुनः) (अस्य) महानारायणस्य (पादः) चतुर्थांशः (इह) संसारे (अभवत्) व्याप्तोऽभवत् (ततः) मायाप्रवेशानन्तरं (विष्वङ्) देव तिर्यगादि रूपेण विविधः सन् (साशनानशने) प्राणिजातं गिरि नद्यादिकञ्च (अभि) अभिलक्ष्य (व्यक्रामत्) व्याप्तवान् ॥ ४ ॥

भाषार्थ

महा नारायण ब्रह्माण्ड से ऊर्द्ध्व उत्कर्षपूर्वक स्थित हुआ। फिर इस महा नारायण का चतुर्थांश इस संसार में व्याप्त हुआ माया में प्रवेश के अनंतर देवता तिर्यक् आदि रूप से नाना रूप वाला होता चराचर जगत को देख कर व्याप्त करता भया ॥ ४ ॥

ततो विराडजायत विराजोऽअधि पूरुषः सजातो
ऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

(ततः) महानारायणात् (विराट्) ब्रह्माण्ड देहस्तथा (विराजः) तद्देहाभिमानी (पुरुषः) (अधि) तमेव देहमाधिकरणं कृत्वा (अजायत) (सः) (जातः) विराट् पुरुषः (अत्यरिच्यत) अतिरिक्तः श्रेष्ठोऽभूत् (पश्चात्) (भूमिं) ससर्ज (अथ) तदनन्तरं (उ) एव (पुरः) देव मनुष्यादीनां शरीराणि ससर्ज ॥ ५ ॥

भाषार्थ

उस महा नारायण से ब्रह्माण्ड देह तथा उस देह का अभिमानी पुरुष उसी

कोअधिकरण करके प्रगट हुआ वह उत्पन्न विराट् पुरुष श्रेष्ठ हुआ पश्चा-
त् भूमि को उत्पन्न किया तदनन्तर ही देवता मनुष्य आदि के शरीरों को-
उत्पन्न किया ॥ ५ ॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे छ-
न्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ६

(तस्मात्)(सर्वहुतः) सर्वं हूयते तस्मात् (यज्ञात्) यज्ञपुरु-
षान्महानारायणात् (ऋचः) (सामानि) (जज्ञिरे) उत्पन्ना-
नि (तस्मात्) महानारायणात् (छन्दांसि) जज्ञिरे (तस्मात्)
महानारायणात् (यजुः) (अजायत) ॥ ६ ॥

भाषार्थः

उस सर्वलय स्थान यज्ञपुरुष महानारायण से ऋग्वेद सामवेद उत्पन्न
हुए उस महानारायण से छन्द उत्पन्न हुए उस महानारायण से यजुर्वेद
प्रकट हुआ ॥ ६ ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रोऽअजायत ७

(ब्राह्मणः) (अस्य) विराट्पुरुषस्य (मुखं) (आसीत्) मुखा-
दुत्पन्नः (राजन्यः) क्षत्रियः (बाहू कृतः) बाहुत्वेन निष्पादि-
तः (अस्य) (यत्) यौ (ऊरू) (तत्) तद्रूपः (वैश्यः) (पद्भ्यां)
(शूद्रः) (अजायत) उत्पन्नः ॥ ७ ॥

भाषार्थः

ब्राह्मण उस विराट् पुरुष का मुख हुआ क्षत्री बाहु हुए इसकी जो ऊरु हैं
तद्रूप वैश्य हुआ चरणों से शूद्र उत्पन्न हुए ॥ ७ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत।

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ८

(मनसः) विराट् पुरुषस्य मनः शक्त्या (चन्द्रमा) (जातः) (चक्षोः) चक्षुषः सकाशात् (सूर्यः) (अजायत) (श्रोत्रात्) कर्णात् (वायुः) (च) (प्राणः) अजायत (च) (मुखात्) (अग्नि) (अजायत) ॥ ८ ॥

## भाषार्थः

विराट् पुरुष के मन से चन्द्रमा उत्पन्न हुआ नेत्र से सूर्य उत्पन्न हुआ कर्ण से वायु और प्राण और मुख से अग्नि उत्पन्न हुआ ॥ ८ ॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां २॥ ऽ अकल्प
यन् ॥ ९ ॥

(नाभ्या) नाभेः सकाशात् (अन्तरिक्षं) (आसीत्) (शीर्ष्णः) शिरसः (द्यौः) स्वर्गः (समवर्तत) उत्पन्नः (पद्भ्याम्) (भूमिः) उत्पन्ना (श्रोत्रात्) (दिशः) उत्पन्नाः (तथा) तेनोक्तविधिना (लोकान्) भूरादीन् (अकल्पयन्) विराट् पुरुषस्य देहात् ९

## भाषार्थः

नाभि से अन्तरिक्ष हुआ शिर से स्वर्ग उत्पन्न हुआ चरणों से भूमि उत्पन्न हुई श्रोत्र से दिशा उत्पन्न हुई उसी उक्त विधि से भूरादि लोकों को विराट् पुरुष के देह से कल्पना किया ॥ ९ ॥

वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः
पुरस्तात्तमेव विदित्वाति मृत्युमेति नान्यः पन्था
विद्यतेऽयनाय ॥ १० ॥

मंत्रः कथयति (अहं) (एतं) (आदित्यवर्णं) आदित्यस्येव वर्णो

यस्यतं (तमसः) (परस्तात्) अविद्याशून्यंज्ञान स्वरूपं (महान्तं) (पुरुषं) महानारायणं (वेद) जानामि (तं) (एव) महानारायण मेव (विदित्वा) ज्ञात्वा (मृत्युं) (अति) अतिक्रम्य (एति) प्राप्नोति (अयनाय) आश्रयाय (अन्यः) (पन्था) मार्गः (न) विद्यते ॥१०॥

भाषार्थः

मंत्र कहता है मैं इस सूर्य तुल्य वर्ण वाले अविद्या शून्य ज्ञान स्वरूप महानारायण को जान्ता हूं उसी महानारायण को जान कर मृत्यु को अतिक्रमण करके प्राप्त करता है आश्रय के लिये दूसरा मार्ग विद्यमान नहीं है ॥१०॥

यो देवेभ्य आतपति यो देवानां पुरोहितः पूर्वो यो देवेभ्योजातो नमो रुचाय ब्राह्मये ॥११॥

(यः) महानारायणः (देवेभ्यः) सूर्यचन्द्रादिभ्यः (आतपति) स्वप्रकाशं ददाति (यः) (देवानां) ब्रह्म विष्णु महेशानां (पुरोहितः) अग्रे हित करः पूज्य श्च (यः) (देवेभ्यः) ब्रह्म विष्णु महेशेभ्यः (पूर्वः) (जातः) प्रादुर्भूतस्तस्मै (ब्राह्मये) (रुचाय) ब्रह्म सम्बंधि ज्योतिषे (नमः) ११॥

भाषार्थः

जो महानारायण सूर्यचन्द्र आदि के लिये अपने प्रकाश को देता है जो ब्रह्म विष्णु महेश आदि देवताओं का आगे हित करवा पूज्य है जो ब्रह्मा आदि देवताओं से पूर्व प्रादुर्भूत हुआ उस ब्राह्म ज्योति के लिये नमस्कार ॥११॥

रुचम्ब्राह्मञ्जनयन्तो देवा अग्रे तदब्रुवन्। यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥१२॥

(अग्रे) कृत युगे (तत) ब्राह्मम् (रुचम्) ब्राह्मज्योतिः स्वरूपं

महानारायणं (जनयन्तः) ज्ञानगोचरं कृतवन्तः (देवाः) वि-
द्वांसः (अब्रुवन्) (यः) (ब्राह्मणः) ब्रह्मज्ञानी (त्वा) त्वां (एवम्)
पूर्वोक्तप्रशंसायुक्तं (विद्यात्) जानीयात् (देवाः) सर्वे देवाः
(तस्य) ब्रह्मनिष्ठस्य (वशे) (असन्) भवन्ति महानारायण-
स्योपासको जगत्पूज्यो भवति॥१२

## भाषार्थः

कृतयुग में उस ब्रह्म ज्योति स्वरूप महानारायण को ज्ञान गोचर करते वि-
द्वानों ने कहा जो ब्रह्मज्ञानी तुझ को पूर्वोक्त प्रशंसा युक्त जाने सब देवता उस
ब्रह्मनिष्ठ के वश में होते हैं अर्थात् महानारायण का उपासक जगत्पूज्य हो-
ता है॥१२॥

श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्रा
णि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म
ऽइषाण सर्वलोकम्मऽइषाण॥१३॥

हे महानारायण (श्रीः) (च) (लक्ष्मीः) (ते) (पत्न्यौ) (च)
(अहोरात्रे) ब्रह्मणोऽहोरात्रे तव (पार्श्वे) पार्श्वस्थानीये
(नक्षत्राणि) क्षनात्संसाररोगान्न रक्षन्ति तानि देवमनुषा-
दिशरीराणि (रूपम्) (अश्विनौ) नरनारायणौ तव (व्यात्त
म्) विकासितं मुखं (इष्णन्) स्वयमिच्छन्सन्। इष इच्छा
याम् (इषाण) स्वात्मानं प्रापय इष गतौ (अमुम्) स्वलो
कम् (मे) (इषाण) प्रापयेति प्रार्थना॥१३॥

## भाषार्थः

हे महानारायण श्री और लक्ष्मी तेरी पत्नी हैं और ब्रह्मा के अहोरात्र तेरे पा-
र्श्व रूप हैं संसार रोग से रक्षा न करने वाले देव मनुष्य आदि शरीर आप के रू

प्त हैं नर नारायण तेरा विकासित मुख हैं स्वयं चाहते तुम अपने आत्मा को प्राप्त कराओ इस अपने लोक को मुझे प्राप्त कराओ सब योगेश्वर्य को मुझे प्राप्त कराओ ॥१३॥

इति श्री भृगुवंशावतंस श्री नाथूराम सूनुज्वालाप्रसाद शर्म संगृहीते मूर्त्तिरहस्ये महापुरुषप्रशंसको नाम द्वितीयोऽध्यायः २

## अथ तृतीयोऽध्यायः

पराशक्तेर्माहात्म्यम् ऋ० मं० १० अ० १० सू० १२५

महालक्ष्मीरुवाच। अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१॥

(अहं) पराशक्तिः (रुद्रेभिः) (च) (वसुभिः) तत्तद्रूपैः (चरामि) (अहं) (आदित्यैः) (उत) (विश्वदेवैः) तत्तद्रूपैश्चरामि (अहं) (उभा) (मित्रावरुणा) (बिभर्मि) धारयामि (अहं) (इन्द्राग्नी) धारयामि (अहं) (उभा) (अश्विना) धारयामि ॥१॥

### भाषार्थः

मैं रुद्र और वसु रूपों से विचरती हूं मैं आदित्यों और विश्वे देवा के रूपों से विचरती हूं मैं दोनों मित्र वरुणों को धारण करती हूं मैं इन्द्राग्नी और दोनों अश्विनी कुमारों को धारण करती हूं ॥२५

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगं अहं दधामि द्रविणं हविष्मते सुप्राव्ये ३ यजमानाय सुन्वते ॥२॥

(अहं) (आहनसं) आहन्तव्यमभिषोतव्यं (सोमम्) (बिभर्मि) (अहं) (त्वष्टारं) (पूषणं) (उत) (भगं) बिभर्मि (अहं) (सुन्वते)

सोमाभिषवं कुर्वते (हविष्मते) (सुप्राव्ये) श्रेष्ठ हविषा तर्पयित्रे (यजमानाय) (द्रविणं) (दधामि) ॥२॥

## भाषार्थ

महालक्ष्मी उवाच मैं अभिषवन योग्य सोम को धारण करती हूं मैं तुष्टा पूषा और भग देवता को धारण करती हूं मैं सोमाभिषव कर्त्ता हविष्मान श्रेष्ठ हवि से तृप्ति करने वाले यजमान के लिये धन देती हूं ॥२॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानां तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥३॥

(अहं) (राष्ट्री) सर्वस्य जगत ईश्वरी (वसूनां) धनानां (संगमनी) संगमयित्री उपासकानां प्रापयित्री (चिकितुषी) यत्साक्षात्कर्तव्यं परंब्रह्म तज्ज्ञानवती स्वात्मतया साक्षात्कृतवती (यज्ञियानां) यज्ञार्हाणां (प्रथमा) मुख्या (तां) यैवगुणविशिष्टाऽहं तां (भूरिस्थात्रां) बहुभावेन प्रपंचात्मना वतिष्ठमानां (भूरि) भूरीणि बहूनि भूतजातानि (आवेशयन्ती) जीवभावेनात्मानं प्रवेशयन्ती (मा) मां (देवा) (पुरुत्रा) बहुषु देशेषु (व्यदधुः) ॥३॥

## भाषार्थः

मैं सब जगत की ईश्वरी हूं उपासकों की धन दाता हूं स्वात्म रूप से ब्रह्म का साक्षात्कार करने वाली हूं यज्ञार्ह देवताओं में मुख्य हूं उस रूपधारी जीव भाव से सब प्राणियों में प्रवेश करने वाली मुझ को देवताओं ने बहुत देशों में स्थापन किया ॥३॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति यईं

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तं अमंतवो मांत उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ४

(यः)(विपश्यति)(यः)(प्राणिति) श्वासोच्छ्वासादिव्यापारं करोति (यः)(ईं)(उक्तं)(शृणोति)(सः)(मया) मयैव (अन्नं) विषयसमूहं (अत्ति) ये (मां)(अमंतवः) मद्विषयज्ञानरहिताः (ते)(उपक्षियन्ति) संसारबंधनं माप्नुवन्ति हे (श्रुत) वेद (श्रद्धिवं) श्रद्धायुक्तं (श्रुधि) शृणु (ते)(वदामि) ४

भावार्थः

जो देखता है जो स्वास उच्छ्वास लेता है जो सुनता है वह मुझ करके ही विषय समूह को भोगता है जो मेरे ज्ञान से शून्य हैं वे संसारबंधन को प्राप्त करते हैं हे वेद श्रद्धा युक्त सुनो तुम से कहती हूं ॥ ४ ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां ॥ ५ ॥

(अहं)(एव)(इदं)(देवेभिः)(उत)(मानुषेभिः) जुष्टं सेवितं वेदं (स्वयं)(वदामि)(यं)(कामये)(तं)(तं)(उग्रं) सर्वाधिकं कृणोमि (तं)(ब्रह्माणं) करोमि (तं)(ऋषिं) करोमि (तं)(सुमेधां) करोमि ॥ ५ ॥

भावार्थः

मैं ही देवता मनुष्यों से सेवित वेद को स्वयं कहती हूं जिस को चाहती हूं उस२ को सब से अधिक करती हूं उस को ब्रह्मा करती हूं उस को ऋषि करती हूं उस को श्रेष्ठ बुद्धि करती हूं ॥ ५ ॥

अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हंतवाउ

अहंजनायसमदंकृणोम्यहंद्यावापृथिवीआ विवेश ॥ ६ ॥

(अहं) (ब्रह्मद्विषे) ब्राह्मणानां द्वेष्टारं (शरवे) हिंसकं (हंतवै) हन्तुं (रुद्राय) (धनुः) (आतनोमि) ज्ययाततं करोमि (अहं) (जनाय) भक्ताय (समदं) संग्रामं (कृणोमि) (अहं) (द्यावापृथिवी) (आविवेश) प्रविष्टवती ॥ ६ ॥

## भाषार्थः

मैं ब्राह्मणों के द्वेष्टा हिंसक के मारने को रुद्र देवता के लिये धनुष को ज्या युक्त करती हूं मैं भक्त के लिये संग्राम करती हूं मैं पृथिवी स्वर्ग में प्रविष्ट हूं ॥ ६ ॥

अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वन्तः समुद्रे। ततोवितिष्ठेभुवनानुविश्वोतामूद्यांवर्ष्मणोपस्पृशामि ७

(अहं) (अस्य) विराट्पुरुषस्य (मूर्धन्) मूर्धनि (पितरं) दिवं (सुवे) जनयामि (समुद्रे) समुद्रवन्त्यस्माद्भूतजातीनीति समुद्रः परमात्मा तस्मिन् (अप्सु) ब्रह्मांभुरूपासु (अन्तः) मध्ये (मम) (योनिः) कारणं ब्रह्माख्यं (ततः) हेतोः (विश्वा) सर्वाणि (भुवना) भुवनानि (अनु) अनुमाविश्य (वितिष्ठे) विविधं व्याप्य तिष्ठामि (उत) अपि च (अमूं) (द्यां) (वर्ष्मणा) कारणभूतेन मायात्मकेन मदीयेन देहेन (उपस्पृशामि) ॥ ७ ॥

## भाषार्थः

मैं इस विराट् के मस्तक पर स्वर्ग को उत्पन्न करती हूं ब्रह्मांभुरूप जलों के मध्य मेरा कारण ब्रह्म है उस हेतु से सब भुवनों में बहु प्रकार से प्रवेश

करके स्थित हूं और इस स्वर्ग को कारण भूत मायात्मक अपने शरीर से स्पर्श करती हूं ॥ ७ ॥

अहमेव वातइव प्रवाम्यारभमाणा भुवनानि विश्वा परो दिवा पर एना पृथिव्यै तावती महिना संबभूव ॥ ८ ॥

(विश्वा) सर्वाणि (भुवनानि) आरभमाणा उत्पादयन्ती (अहं) (एव) (वातः) (इव) (प्रवामि) (दिवः) (परः) (एना) (पृथिव्या) (परः) महापुरुषः (तावती) महापुरुष संयुक्ताऽहं (महिना) महिम्ना (संबभूव) नाना रूपेण प्रादुर्भूता ॥ ८ ॥

भाषार्थः

सब भुवनों को उत्पन्न करती मैं ही वायु के समान चलती हूं स्वर्ग से परे और इस पृथवी से परे जो महापुरुष है उतनी ही और उससे संयुक्त मैं महिमा से नाना रूप वाली हुई हूं ॥ ८ ॥

इति श्री भृगुवंशावतंस श्री नाथूराम सूनु ज्वालाप्रसाद शर्म संगृहीते मूर्त्तिरहस्ये महालक्ष्मि माहात्म्य प्रशंसको नाम तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः

सृष्ट्युत्पत्ति विधिः यजु० अ० १७ मंत्र १७ आदि ॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ२ ॥ आविवेश ॥ १ ॥

(यः) (ऋषिः) अतीन्द्रियद्रष्टा सर्वज्ञः (होता) संहाररूप होमस्य कर्त्ता (नः) अस्माकं वैदिक मंत्राणां (पिता) जनको महानारायणः (इमा) इमानि (विश्वा) सर्वाणि (भुवनानि) (जुह्वत्)

संहरन्सन् (न्यसीदत्) एकमेवाद्वितीयं स्थितवान् (सः) (प्रथमच्छन्) प्रथममेकमद्वितीयं स्वरूपं प्रविष्टः सन् (आशिषा) पुनः सिसृक्षा रूपेणाभिलाषेण (द्रविणं) जगद्रूपं धनं (इच्छमानः) (अवरान्) माया विकारान्व्यष्टि समष्टि देहान् (आविवेश) अन्तर्यामि रूपेण प्रविष्टः ॥ १ ॥

भाषार्थः

जोसर्वत्तसंहार रूप होम का कर्त्ता हम वैदिक मंत्रों का जनक महानारायण इन सब भुवनों को संहार कर्त्ता अकेला स्थित हुआ वह प्रथम एक अद्वितीय स्वरूप में प्रविष्ट होता फिर सृष्टि रचना की इच्छा से जगत रूप धन को चाहता माया विकार व्यष्टि समष्टि देहों में अन्तर्यामी रूप से प्रविष्ट हुआ ॥ १ ॥

किंस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् यतो भूमिञ्जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥

(स्वित) वितर्के ब्रह्माण्डं सृजतो महानारायणस्य (अधिष्ठानं) निवासस्थानं (किंस्वि) (आसीत्) किमपिन (स्वित) (आरम्भणम्) उपादान कारणं (कथा) क्रिया द्योतकं वैदिकवाक्यं (कतमत्) किं (आसीत्) किमपिन (यतः) (विश्वचक्षाः) सर्व द्रष्टा अतीतानागत वर्त्तमान कालानां युगपद्द्रष्टा (विश्व कर्मा) महानारायणः (भूमिं) ब्रह्माण्डं (जनयन्) सन् (महिना) महिम्ना विद्याख्य पराशक्त्या (अविद्यां) अव्यक्ताख्यां वीज रूपां मायां (और्णोत्) व्याप्तवान् ॥ २ ॥

भाषार्थः

अस्मिन्ब्रह्माण्ड रचते महानारायण का निवास स्थान क्या था अर्थात् कुछ नहीं तथा उपदान कारण क्रिया द्योतक वैदिक वाक्य कौन थे अर्थात् कोई नहीं जिस कारण सर्व दृष्ट महानारायण ने ब्रह्माण्ड को उत्पन्न करते अपनी परा शक्ति से वीज रूप अव्यक्त नाम माया को व्याप्त किया २

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो वाहुरुत विश्वतस्पात्। सम्वाहुभ्यान्धमति सम्पतत्रैर्द्यावा भूमीजनयन्देव एकः ॥ ३॥

(विश्वतश्चक्षुः) (उत) च (विश्वतो मुखः) सर्वतो मुखानि यस्य (विश्वतो वाहुः) (उत) (विश्वतस्पात्) सर्वतः पादायस्य सः (एकः) अद्वितीयः (देवः) असंख्य ब्रह्माण्डैः क्रीडन शीलो महानारायणः (द्यावा भूमी) (जनयन्) सन् (वाहुभ्याम्) अग्नि सूर्य रूपाभ्यां जीवेश रूपाभ्यां वा (सन्धमति) ब्रह्माण्डं सम्यक् ज्वाला युक्तं करोति तथा (पतत्रैः) गमन शीलैरनित्यैरात्म प्रति विंबैः (सम्) सन्धमति व्यष्टि देहान्प्रकाशयति ३

भाषार्थः

सब ओर नेत्र मुख वाहु पाद रखने वाला असंख्य ब्रह्माण्डों में क्रीडन शील महानारायण पृथिवी स्वर्ग को उत्पन्न करता अग्नि सूर्य रूप वा जीवेश रूप भुजाओं से ब्रह्माण्ड को सम्यक् ज्वाला युक्त करता है तथा पतन शील अनित्य आत्म प्रति विंबों से व्यष्टि देहों को प्रकाशित करता है ॥ ३॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति कं स्विद्गर्भं प्रथमन्दध्र आपो यत्र देवाः समपश्यन्त पूर्वे ४

(यत्) यस्मान्महानारायणः (दिवा) द्युलोकात् (परः) (एना)

(पृथिव्या)(परः)(देवेभिः)(असुरैः)(परः)(अस्ति)तस्मात् (स्वित्)प्रश्नः(आपः) महा नारायणांशवः (प्रथमं)(कं)(गर्भं)(दध्रे) अधार यन्(यत्र) गर्भे (देवाः) ब्रह्मादयः (सं) महानारायणं (अपश्यन्त) ४॥

भाषार्थः

जिस कारण महा नारायण स्वर्ग से पर है इस पृथिवी से पर है देवता असुरों से पर है उस कारण प्रश्न है कि महा नारायण के किरण रूप जलों ने प्रथम किस गर्भ को धारण किया जिस गर्भ में ब्रह्मा आदि देवताओं ने महानारायण को देखा॥४॥

तमिद्गर्भं प्रथमन्दध्रऽआपो यत्र देवास्समगच्छन्त विश्वेऽअजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ५

(आपः) महा नारायणांशवः (प्रथमं)(तं)(इत्) एव (गर्भं) ब्रह्माण्डं (दध्रे) दाधिरे (यत्र) गर्भे (विश्वे) सर्वे (देवाः) ब्रह्मादयः (सं) महा नारायणं (अगच्छन्त) कथं गर्भोसन्निः (अजस्य) महानारायणस्य (नाभौ) नाभौ मध्ये वा (एकं) अविभक्तं प्रधानाख्यं वीजं (अर्पितं) स्थापितं (यस्मिन्) महानारायणांश युक्ते वीजे (विश्वानि) सर्वाणि (भुवनानि) भूतजातानि (अधितस्थुः) आधिकं स्थितानि॥५॥

भाषार्थः

महानारायण के तेज रूप जलों ने प्रथम उसी ब्रह्माण्ड रूप गर्भ को धारण किया जिसमें ब्रह्मा आदि सब देवताओं ने महा नारायण को प्राप्त किया गर्भ की उत्पत्ति इस प्रकार है कि महा नारायण की नाभि वा उसम

हानारायण के मध्य प्रधान नाम वीज स्थापित हुआ जिस बीज में सब भुवन भूत जात आधिकास्थित हुए ॥ ५ ॥

न तं विदाथ य इमा जजानान्य द्युष्माक मन्तरं म्बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थ शासश्चरन्ति ६

(यः) महानारायणः (इमा) इमानि भूतजातानि (जजान) उत्पादितवान् तथा (युष्माकं) अहं प्रत्यय गम्यानामात्म मति विंवानां (अन्तरं) अभ्यन्तरं (अन्यत्) अहं प्रत्ययाद् तिरिक्तं वेद्य मेश्वर तत्त्वं (वभूव) (तं) महा नारायणं यूयं (न) (विदाथ) जानीथ यस्माद्भवंतः (नीहारेण) नीहार सदृशेनाज्ञानेन (च) तथा (जल्प्या) देवो ऽहं नरो ऽहं ममेदं गृह क्षेत्रामित्याद्यनृत जल्पनेन (प्रावृताः) (असुतृपः) प्राणानांतृप्ति कारकाः (उक्थ शासः) परलोक भोगान् सम्पादयितुं यज्ञेषु शस्त्र स्तोतारः (चरन्ति) प्रवर्त्तन्ते ॥ ६ ॥

## भाषार्थः

जिस महानारायणने इन भुवन और प्राणीयों को उत्पन्न किया तथा अहं प्रत्य गम्य आत्म मति विंवों के मध्य अन्त र्यामी रूप से स्थित हुआ उस महानारायण को तुम नहीं जान्ते हो क्योंकि नीहार सदृश अज्ञान और अहंकार ममत्व सम्बंधी अनृत वक्तृता से युक्त और केवल प्राण पोषक हो ६

इति श्री भृगु वंशा वतंस श्री नाथूराम सूनु ज्वाला प्रसाद शर्म संगृहीते मूर्त्ति रहस्ये सृष्ट्युत्पत्तिविधिकथनो नाम चतुर्थो ऽध्यायः ४

## अथ पंचमो ऽध्यायः

महाविष्णोरवतार माह साम वेदे उत्तरार्च्चिके १८ अ० २ ख १ सू ३

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः अतो
धर्म्माणि धारयन् १

(अदाभ्यः) केनापि हिंसितुमशक्यः (गोपाः) श्री कृष्णरूपः (विष्णुः) महाविष्णुः (अतः) स्वकीयेन चतुर्थ भागेन (धर्म्माणि) धारणयोग्यान्यसंख्य ब्रह्माण्डानि (धारयन्) (त्रीणि) (पदा) पदानि प्राप्ति योग्यानि तेजांसि महालक्ष्मि महासरस्वति महाकालि रूपाणि (विचक्रमे) यथा पादोऽस्य विश्वभूतानि त्रिपादस्यामृतं दिवीति॥१॥

भाषार्थः

अविनाशी श्री गोपाल महा विष्णु ने अपने चतुर्थ भाग से असंख्य ब्रह्मांडों को धारण करते हुए महालक्ष्मि महा सरस्वती महा कालि रूप त्रिपाद् विभूति को व्याप्त किया॥१॥

महापुरुषस्यावतराणां वर्णनम् ब्रह्मावतारः ऋ॰ म॰ १० अ॰ १० सू॰ १२१

आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ततो देवानां समवर्ततासुरेकः कस्मै देवाय
हविषा विधेम॥२॥

(यत्) यं (गर्भं) ब्रह्माण्डं (दधानाः) (अग्निं) हिरण्यगर्भं (जनयन्तीः) (बृहतीः) महत्यः (आपः) ब्रह्मांभुरूपापः (ह) एव (विश्वं) सर्व ब्रह्माण्डं (आयन्) व्याप्नुवन् (ततः) गर्भात् (देवानां) (असुः) प्राणभूतः (एकः) ब्रह्मा (समवर्तत) समजायत वयं (कस्मै) प्रजापतये (देवाय) (हविषा) (आविधेम)॥२॥

भाषार्थः

## महापुरुष के अवतारों का वर्णन

जिस ब्रह्मांड रूप गर्भ को धारण करते और हिरण्य गर्भ को उत्पन्न करना चाहते ब्रह्मांभु रूप महाजलों ने ब्रह्माण्ड को व्याप्त किया उस ब्रह्माण्ड रूप गर्भ से देवताओं के प्राण रूप ब्रह्माजी उत्पन्न हुए उस प्रजापति देवता के लिये हवि देते हैं ॥२॥

हिरण्यगर्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ आसीत्। स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥३॥ ऋ० मं० १० सू० १२१

(अग्रे) प्रपंचोत्पत्तेः प्राक् (हिरण्यगर्भः) ब्रह्मज्योतीरेव गर्भो यस्य स ब्रह्मा (समवर्तत) समजायत (जातः) जातमात्र एव (एकः) अद्वैतः सन् (भूतस्य) सर्वस्य जगतः (पतिः) ईश्वरः (आसीत्) (सः) (इमाम्) (पृथिवी) (उत) (द्याम्) (दाधार) धारयति ॥३॥

### भाषार्थः

प्रपंच की उत्पत्ति से पूर्व ब्रह्म ज्योति रूप गर्भवाले ब्रह्माजी उत्पन्न हुए अकेले उत्पन्न होते ही सब जगत के स्वामी हुए वेही इस पृथ्वी स्वर्ग को धारण करते हैं ॥३॥

### रुद्रावतारः यु० अ० १६

नम॑स्ते रुद्र म॒न्यव॑ उ॒तो त॒ इष॑वे॒ नमः॑। बा॒हुभ्या॑मु॒त ते॒ नमः॑ ॥४॥

हे (रुद्र) (ते) तव (मन्यवे) क्रोधाय (नमः) नमस्कारोऽस्तु (उतो) अपिच (ते) तव (इषवे) बाणाय (नमः) (उत) (ते) (बाहुभ्यां) (नमः) अत्र श्रुतिः यत्तो वेनमो यत्ते नैवेन मेन-

न्नमस्कारेण नमस्यति तस्मादुहनायद्दियंब्रूयान्नमस्त इ-
ति ९।१।१।१६—॥ ४॥

भाषार्थः

हे रुद्रजी आप के क्रोध को नमस्कार और आप के बाण को नमस्कार-
और आप की भुजाओं को नमस्कार ॥ ४॥

यातेरुद्रशिवातनूरघोरापापकाशिनीतयान
स्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि॥५

हे (गिरिशन्त) गिरि कैलाशे स्थित (रुद्र) (या) (ते) तव
(शिवा) शान्ता मंगल रूपा (अघोरा) अविषमा सौम्या-
(अपापकाशिनी) पुण्य फल दात्री (तनूः) जगत्विस्तार
कर्त्री शक्ति रस्ति (तया) (शन्तमया) परमानन्द रूपया-
(तन्वा) देहाकारया (नः) अस्मान् (अभिचाकशीहि) अ-
भिपश्य ॥ ५॥

भाषार्थः

हे कैलास वासी रुद्र जो आप की मंगल रूप सौम्य पुण्य फल दाता शक्ति
है उस परमानन्द रूप देहाकार के द्वारा हम को देखो ॥ ५॥

असौयस्ताम्रोऽअरुणउतबभ्रुःसुमंगलः येचै
न थं रुद्राअभितोदिक्षुश्रिताः सहस्रशोऽवैषाथं
हेडईमहे॥ ६॥

यः सूर्यो विराडात्मा तस्य रूपेण रुद्रः स्तूयते (च) (यः) (असौ)
(ताम्रः) उदये ऽत्यन्त रक्तः (अरुणः) अस्त काले रक्तः (उत)
(अपिच) (बभ्रुः) पिङ्गल वर्णो ऽन्यदा (सुमङ्गलः) मंगल-
रूपः (च) (ये) (सहस्रशः) असंख्याताः (रुद्राः) देवारुद्रं-
शाः यथा श्रुतिः या असंख्याता सहस्राणी मांलोकाननु-

माविश ग्नेतास्ता देवतायाभ्य एनज्जु होति ६।१।१।१८
(एनम्) (आभितः) (दिक्षु) प्राच्यादिषु (ष्ठिताः) (एषाम्)
(हेडः) क्रोध मस्मदपराधजं वयमेव (ईमहे) निवारया
मः भक्त्या सर्व स्वार्पणेन वा निराकुर्मः॥६॥

भाषार्थः

अब सूर्य रूप रुद्र की स्तुति करते हैं जो यह प्रातः सायंकाल पर रक्त वर्ण पिंगल वर्ण और अन्य काल पर मंगल रूप है और जो असंख्य रुद्र अर्थात रुद्रांश देवता इस रुद्र रूप सूर्य के चारों ओर सब दिशाओं में आश्रित हैं इन्हों के क्रोध को भक्ति और सर्वार्पण द्वारा हम निवारण करते हैं६

नमः कपर्दिनेच व्युप्त केशायच नमः सहस्राक्षा
यच शतधन्वनेच नमो गिरिशयायच शिपिविष्टा
यच नमो मीढुष्टमायचेषुमतेच॥७॥

(कपर्दिने) जटाजूट धराय (च) (व्युप्त केशाय) मुंडि
त केशाय (नमः) (च) सहस्राक्षाय (च) (शतधन्वने)
वहुधनुर्धारिणे (नमः) (च) (गिरिशयाय) कैलासे शेतेत-
स्मै (च) (शिपिविष्टाय) विष्णुरूपाय (नमः) (च) (मीढुष्ट-
माय) धर्मार्थ काम मोक्षैः सेक्त्रे (च) (इषुमते) वाणधारि-
णे (नमः)॥७॥

भाषार्थः

जटाजूटधारी मुंडित केश के लिये नमस्कार सहस्राक्ष और वहु धनुषधारी के लिये नमस्कार कैलासवासी और विष्णु रूप के लिये नमस्कार धर्मार्थ काम मोक्ष से सींचने वाले वाण धारी को नमस्कार॥७॥

वैष्णावावतारा:

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा ॥ ८ ॥

ऋ० म० १ अ० २१ सू० १५४

(तत्)(मृगः) नृसिंह वराह रूपाभ्यां मृगः (न) च (भीमः) राम कृष्ण परशुराम कल्कि रूपै रसुराणां भयङ्करः (कुचरः) (कु) जलं (उ) एव सञ्चार स्थानं यस्य सकुचरः कच्छप मीन रूपः (गिरिष्ठाः) वामन रूपेण वेद वाचि स्थितः (विष्णुः) (वीर्येण) (प्रस्तुवते) (यस्य) वामन रूपस्य (त्रिषु) (उरुषु) (विक्रमणेषु) पाद प्रक्षेपेषु (विश्वा) सर्वाणि (भुवनानि) (अधिक्षियन्ति) निवसन्ति ॥ ८ ॥

वैष्णावावतारः

भाषार्थः

वह नृसिंह वराह रूपसे मृग रूप और राम कृष्ण परशुराम कल्कि रूपों से असुरों के भयदाता कच्छप मीन रूप से जलचारी वामन रूप से वेद वाणी में स्थित विष्णुजी अपने पराक्रम से स्तुति किये जाते हैं जिस वामन रूप के तीन बड़े पाद प्रक्षेपों में सब भुवन निवास करते हैं ॥ ८ ॥

(कपिलावतार माह ऋ० म० १० अ० २ सू० २७

दशानामेकं कपिलं समानं तं हिन्वंति क्रतवे पार्याय गर्भं माता सुधितं वक्षणास्ववेनन्तं तुषयंती बिभर्त्ति ॥ ९ ॥

(तं)(दशानां) दशावताराणां (समानं)(एकं) अद्वैतं (कपिलं) कपिलावतारं (पार्याय) परिसमापयितव्याय

(क्रतवे) ब्रह्म यज्ञाय (हिन्वंति) प्रादुर्भावाय प्रेरयन्ति (माता) (वक्षणासु) नदीरूप नाडीनां मध्ये (सुधितं) प्रजापतिना। स्थापितं (अवेनन्तं) निवासम कामयमानं (गर्भं) प्रजापतेर्गर्भं (तुषयन्ती) तुष्यन्ती सम्यग्ज्ञाना दुपदेष्टुं योग्योऽयमिति प्रीता सती (विभर्त्ति) धारयति॥ ९॥

भाषार्थः

दशावतारों के समान अद्वैत कापिल जी को परिसमाप्ति योग्य ब्रह्म यज्ञ के लिये प्रेरणा करते हैं और माताजी प्रजा पति द्वारा गर्भ में स्थापित निवासन चाहते गर्भ को अपना उपदेशक जानकर प्रसन्न होती धारण करली है॥ ९॥

परशुरामावतार माह सामवे० छन्द आर्चिके २।२।२।७

अपिबत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे यत्रादिदेष्ट पौंस्यम्॥ १०॥

(इन्द्रः) परमेश्वरो विष्णुः इंदि परमैश्वर्ये (सहस्रबाह्वे) सहस्रबाह्वाख्य नृपपतये (कद्रुवः) (क) कामः (द्रु) गच्छत्यूर्द्ध्वं वृक्षः कामवृक्षरूप देहात्। द्रुगतो (सुतं) अभिषुतं क्रोधं (अपिबत्) मनसि धारयामास (तत्र) तस्मिन्काले (पौंस्यम्) वैष्णवंवीर्यं (आददिष्ट) आदीप्यत॥ १०॥

भाषार्थः

परशुराम रूप परमेश्वरने सहस्रबाहु के लिये क्रोध को धारण किया उस समय उनका पराक्रम प्रदीप्त हुआ॥

रामावतार माह सामवेदे उत्तरार्चिके १५ अ० २ ख १ सू३

भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्। सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्व

ऐरेभि रामे मेस्थात् ॥१०॥

यदा (भद्रः) भजनीयः श्रीरामः (भद्रया) भजनीयया श्रीसीतया (सचमानः) सहितः (अगात्) आगच्छति देहे प्रादुर्भवति तदा (जारः) रावणः (स्वसारं) ऋषीणां रुधिरेणोत्पन्नत्वाद्भगिनी तुल्यां सीतां (अभ्येति) अभिगच्छति (पश्चात्) अन्तकाले (अग्निः) क्रोधेन प्रज्वलितो रावणः (अभितिष्ठन्) युद्धे श्रीरामस्य सन्मुखे तिष्ठन्सन् (सुप्रकेतैः) सुप्रज्ञानैः (उशद्भिः) श्वेतैः (वर्णैः) (द्युभिः) कुंभकर्णादीनां जीवात्मभिः सह (रामम्) श्रीरामरूपं विष्णुं (अस्थात्) विष्णोः सामिप्यतां प्राप्तवान् ॥१०॥

## भाषार्थः

भद्र (राम) भद्रा (सीताजी के साथ प्रकट हुए तब जार (रावण) ने ऋषियों के रुधिर से उत्पन्न होने के कारण अपनी भगिनी सीता को हरण किया पीछे अन्तकालपर क्रोध से प्रज्वलित रावण ने सन्मुख होकर कुंभकर्ण आदि के सुबुद्धज्ञानी जीवात्माओं के साथ श्रीराम की सामिप्यता को पाया ॥११॥

कृष्णावतार माह सामवेदे उत्तरार्चिके १५ अ२ ख१ सू३

कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितुर्जाम्। ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्विभाति ॥१२॥

(यद्) यदा (बृहतः) (पितुः) महानारायणस्य (योषाम्) महामायां (जनयन्) नन्दगृहे प्रादुर्भूतां कुर्वन् (जाम्) जायमानां (एनीम्) गमनशीलां (कृष्णां) कृष्णवर्णादे

हरूपांभक्तानि (वर्पसा) आत्मीयेन तेजसा (अभिभूत्) अभि-
भवति व्याप्नोति नदा (दिवः) (सूर्यस्य) मानस सूर्यस्य (भा
नुम्) आत्मानं (ऊर्द्ध्वं) स्तभायन् योगनिष्ठः सन् (वसुभिः)
(अरतिः) धनदेहाभिमानरहितः सन् (विभाति) विविधं भाति
भक्तानामुपर्यनुग्रहदृष्ट्या विभाति शत्रूंश्च दहति ॥ १२॥

व्रज भाषार्थः

जब वेमहानारायण की योषा महामाया को नन्द गृह में प्रकट करते हुए जाय-
मान गमन शील कृष्णा वर्ण देह रूपा माया को अपने तेज से व्याप्त करता है त-
व मानस सूर्य के आत्मा को ऊंचा स्थित करते अर्थात् योग निष्ठ होने धन देहा
भिमान से रहित होने श्रीरूस्मनानाविधि से प्रकाश करते हैं अर्थात् भक्तों पर अनु-
ग्रह दृष्टि से और शत्रुओं पर क्रोध दृष्टि से ॥ १२॥

श्रीवाराहावतार माहत्त्व० मयू० ९ अ ५ सू० ९७

प्रकाव्यमुशनेव ब्रुवाणो देवो देवानाञ्जनिमावि
वक्ति महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्यै
ति रेभन् ॥ १३॥

(उशना) शुक्रः (इव) (काव्यं) स्तोत्रं (ब्रुवानः) उच्चारयन् (देवः)
वेदाभिमानी देवः (देवानां) अवताराणां (जानिमा) जन्मानि
(प्रावि वक्ति) प्रकर्षेण ब्रवीति (महिव्रतः) पृथिव्या धारकः । व्र
भृतो (शुचिबन्धुः) दीप्त तेजस्कः (पावकः) पापानां शोधकः
(वराहः) श्रीवाराहावतारः (रेभन्) शब्दं कुर्वन् (पदा) पादे-
न (अभ्येति) देवानां समीपे गच्छति ॥ १३॥

भाषार्थः

शुक्र की समान स्तोत्र को उच्चारण करता वेदाभिमानी देवता अवतारों के ज-

न्मों को कहना है पृथिवी धारण करने वाले दीप्त तेज पापों से शुद्ध करने वाले श्री वाराहजी शब्द करते हुए देवताओं के समीप जाते हैं ॥१३॥

सयोजयन्तउरुगायस्यजूतिं वृथाक्रीडन्तम्मिमतेनगावः । परीणसङ्कृणुतेतिग्मश्रृङ्गो दिवाहरिर्ददृशेनक्तमृज्रः ॥१५॥

(सः) वाराहावतारः (उरुगायस्य) बहुभिः स्तुतस्य विष्णोः (जूतिं) गतिं (योजयते) स्वकीये देहे युनक्ति (वृथा) माया रूपेण (क्रीडन्तं) (गावः) इन्द्रियाणि (न) (मिमते) मातुं नशक्नुवन्ति (तिग्मश्रृङ्गः) (परीणसं) भूमिं बहुपदार्थवतीं (कृणुते) करोति (दिवा) देवानां सञ्चारकाले (हरिः) विष्णुरूपः (ददृशे) दृश्यते (नक्तं) असुराणां सञ्चारकाले (ऋज्रः) ऋजुगामी विस्पष्टो वराहो दृश्यते ॥१५॥

भाषार्थः

वह वाराहजी विष्णु की गति को अपनी देह में युक्त करते हैं इन्द्रियां उस माया रूप से क्रीडा करने वाले को नहीं जान सकती वह तीक्ष्ण श्रृंग वाला पृथिवी को बहु पदार्थ वती करता है दिवस अर्थात् देव संचार काल में विष्णु रूप दीखता है और रात्रि अर्थात् असुरों के संचार काल में वाराह रूप दीखता है ॥१४॥ श्री वामनावतार माह साम १८ अ २ ख १ सू २

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुले ॥१५॥

(विष्णुः) त्रिविक्रमावतारो वामनः (इदम्) विश्वं (विचक्रमे) विभज्य क्रमते स्म (त्रेधा) (पदं) (निदधे) भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयं (अस्य) पदं (पांसुले) चतुर्दशभुव

न मय ब्रह्माण्डे (समूढम) सम्य गन्तर्भूतं ॥ १५ ॥

भाषार्थः

अमरेश त्रिविक्रमावतार वामन जी इस विश्व को उलंघन करते हैं तीन पग रखते हैं एक भूमि पर दूसरा अन्तरिक्ष में तीसरा स्वर्ग में इसका चरन चतुर्दश भुवन मय ब्रह्माण्ड में सम्यक् अन्तर्भूत होता है ॥ १५ ॥

यजुर्वेदे अ० १८ मं० ७१

मृगोन भीमः कुचरो गिरिष्ठाः परावत आजग न्था परस्याः सृकं संशाय पविमिन्द्र तिग्मं विशत्रून्ताढि विमृधो नुदस्व ॥ १६ ॥

हे (इन्द्र) परमेश्वर (मृगः) वराह नृसिंह रूपाभ्यां मृगस्व रूपः (भीमः) राम रुषा परशुराम कल्कि रूपैरसुराणांभ यङ्करः (कुचरः) मत्स्य कूर्म रूपाभ्यां जलचरः (न) च (गि रिष्ठाः) वामन रूपेण वेद वाचि स्थितस्त्वं (अपरस्याः) अप रायाः (परावतः) ब्रह्मणः (आजगन्थ) माद्रुर्भूतोऽसि (सृक म्) शत्रु शरीरे गमन शीलं (तिग्मम्) (पविम्) असुराणांव धेऽपि शुद्धं सुदर्शन परश्वादि शस्त्र समूहं । पुशाधे (संशा य) तीक्ष्णी कृत्य (शत्रून्) (विताढि) विशेषेणताडय (मृ धः) पाप्मानं (विनुदस्व) विशेषेण प्रेरय दूरी कुरु ॥ १६ ॥

भाषार्थः

हे परमेश्वर वराह नृसिंह रूपसे मृग स्वरूप राम आदि रूपसे असुरों के भय दाता मत्स्य कूर्म रूपसे जल चर और वामन रूप से वेद वचन में स्थि त तुम अपरा से अन्य परावान ब्रह्म से प्रकट हुए हो शत्रु देह में गमन शी ल तीक्ष्ण और असुरवध में भी शुद्ध सुदर्शन परशु आदि शस्त्र समूह

कोतीक्ष्णकरके शत्रुओं को ताडना करो और पाप को दूर करो ॥ २६ ॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् संक्रन्दनोऽनिमिषऽएकवीरः शतᳫं सेना अजयत्साकमिन्द्रः ॥ २७ ॥

(आशुः) आसमन्तात्शु इत्यव्यक्तोशब्दोयस्य सवाराहावतारः (शिशानः) शिथिलामन्दाचलः समुद्रमथने यस्य शानस्तीक्ष्णकारकः सकूर्मावतारः (वृषभः) वर्णानां श्रेष्ठो वामनावतारः (भीमः) असुराणां भयङ्करो नृसिंहावतारः (घनाघनः) घनः। घनश्यामः। अघनः। वलदेवावतारः (चर्षणीनां) दस्युप्रायमनुष्याणां (क्षोभनः) क्षोभहेतुर्निष्कलङ्कावतारः (संक्रन्दनः) क्षत्रियाणां समाह्वाता परशुरामावतारः (अनिमिषः) मत्स्यावतारः (न) च (एकवीरः) अद्वैतोवीरोरामावतारः (इन्द्रः) परमेश्वरः (साकम्) देवैः सह देवांशनरादिभिः सह वा (शतᳫं) असंख्याताः (सेनाः) देवशत्रूणां सेनाः (अजयत्) ॥ २७ ॥

## भाषार्थः

वाराह कूर्म वामन नृसिंह कृष्ण वलदेव निष्कलंक परशुराम मत्स्य रामावतार वाले परमेश्वरने देवताओं वा देवांश मनुष्य आदि के साथ असुरों की असंख्य सेनाओं को जीता ॥ २७ ॥

इति श्री भृगुवंशावतंस श्रीनाथूराम सूनु ज्वालाप्रसाद शर्म्म संगृहीते मूर्त्ति रहस्ये महानारायणस्यावतार निरूपको नाम पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

महानारायणस्यांशकलारूप देवानां मंत्राः ऋ० म० १० सू० ६३ म० ५

नृचक्षसो अनिमिषंतो अर्हणा बृहद्देवासो अमृतत्वमानशुः। ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥१॥

(नृचक्षसः) कर्म नेतृणां मनुष्याणां द्रष्टारः (अनिमिषंतः) सर्वदा जागरूकाः (देवासः) देवाः (अर्हणा) लोकस्य परिचरणार्थं (बृहत्) (अमृतत्वं) अमरणधर्मं (आनशुः) प्राप्तास्ते (ज्योतीरथाः) दीप्यमान रथोपेताः (अहिमायाः) कैश्चिदप्यहंतव्य प्रज्ञाः (अनागसः) पाप रहिताः (दिवः) द्युलोकस्य (वर्ष्माणं) समुच्छ्रितं देशं (स्वस्तये) लोकस्य क्षेम करणार्थं (वसते) आधि वसन्ति यद्वा स्वतेजसाच्छादयन्ति ॥१॥

## भाषार्थः

कर्मनेता मनुष्यों के द्रष्टा सदा जागरण शील देवता लोक की परिचरणार्थ अमरत्व को प्राप्त हैं वे दीप्यमान रथ वाले अहन्तव्य बुद्धि निष्पाप देवदा स्वर्ग-लोक के उच्छ्रित देश में लोक के कल्याणार्थ वास करते हैं ॥१॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम्। ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥२॥

(सम्राजः) स्वतेजोभिः सम्यग्राजमानाः (सुवृधः) सुवृद्धाः (ये) देवाः (यज्ञं) (आययुः) आयान्ति (अपरिह्वृताः) कैश्चिदप्यहिंसिताः (दिवि) द्युलोके (क्षयं) निवासं (दधिरे) कुर्वन्ति (तान्) (आदित्यान्) अदितेः पुत्रान् (अदितिं) देवमातरं (महो) महतो गुणाधिक्येन (नमसा) हवीरूपेणान्नेन (सुवृक्तिभिः) शोभनाभिः स्तुतिभिः (स्वस्तये) कल्याणाय

(आविवास) आभि मुख्येन परिचर॥ २॥

भाषार्थः

अपनेतेजसे राजमान अति वृद्धि युक्त जो देवता यज्ञ में आते हैं वे सबसे अजेय स्वर्गलोक में वास करते हैं उन अदिति के पुत्रों और अदिति माता को हविरूप महा अन्न और शुभ स्तुतियों के द्वारा कल्याणार्थ पूजो॥ २॥

भरेष्विन्द्रं सुहवं हवामहेऽहोमुचं सुकृतं दैव्यं जनमग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये॥ ३॥

(सुहवं) शोभनाह्वानं (इन्द्रं) (भरेषु) यज्ञेषु (हवामहे) (अहोमुचं) पापस्य मोचकं (सुकृतं) सुकर्माणं (दैव्यं) ईश सम्बंधिनं (जनं) (अग्निं) (मित्रं) (वरुणं) (भगं) (द्यावापृथिवी) (मरुतः) (सातये) अभीष्ट दानाय (स्वस्तये) कल्याणाय हवामहे॥ ३॥

भाषार्थः

शुभाह्वान वाले इन्द्र को यज्ञों में आह्वान करते हैं पाप मोचक शुभकर्मा ईश सम्बंधी अग्नि मित्र वरुण भग पृथिवी स्वर्ग और मरुद्गणों को अभीष्टदान और कल्याण के लिये आव्हान करते हैं॥ ३॥

सरस्वती सरयुः सिंधुरूर्मिभिर्महो महीरवसायंतु वक्षणीः देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत॥ ४॥ मं० १० अ० ५ सू० ६४

(महो) महतोऽपि (महीः) महत्यः (ऊर्मिभिः) सहिता (सरस्वती) (सरयुः) (सिंधुः) (वक्षणीः) नद्यः (अवसा) रक्षणेन हेतुना (आयंतु) अस्मदीयं यज्ञं मत्या गच्छन्तु (मातरः)

मातृभूताः(सूदयित्वः) प्रेरयित्र्यः(देवीः)(आपः)(घृतवत्)(मधुमत्)(पयः)(नः)(अर्चत) प्रयच्छत ॥ ४ ॥

## भाषार्थः

महान सेभी महानलहरों से युक्त सरस्वती सरयू सिंधु नाम नदी देवियां रक्षा करने के लिये हमारे यज्ञ में आओ माता की समान प्रेरक जल देवियां घृतमधुयुक्त दुग्धको हमेंदो ॥ ४ ॥

गंगादितीर्थानां मंत्रः म० १० अ ६ सू ७०

**इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ५ ॥**

हे(गंगे) हे(यमुने) हे(सरस्वति) हे(शुतुद्रि) हे(परुष्णि) हे(मरुद्वृधे) हे(आर्जीकीये)(परुष्ण्या)(असिक्न्या)(वितस्तया)(सुषोमया) साहिना यूयं(मे)(स्तोमं) स्तोत्रं(आसचत) आसेवध्वं(शृणुह्या) शृणुत ॥ ५ ॥

## भाषार्थः

हे गंगा हे यमुना हे शुतुद्रि हे परुष्णि हे मरुद्वृधे हे आर्जीकीये नदी देविओ परुष्णि असिक्नि वितस्ता सुषोमा नदी देवियों के साथ तुम हमारे स्तोत्र को मानो और सुनो ॥ ५ ॥ सिंधुतीर्थस्य मंत्रः म १० अ ६ सू ७६

**सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ६ ॥**

(सिंधुः) देवता(सुखं) सुखकरं(अश्विनं) अश्ववन्तं(रथं)(युयुजे) युनक्ति(तेन) रथेन(वाजं) अन्नं(सनिषत्) प्रयच्छ

नु (अदब्धस्य) अन्यैरहिंसस्य (सुयशसः) (विराप्शिनः) महतः (अस्य) सिंधोः (हि) (महिमा) (अस्मिन्) (आजौ) यज्ञे (पनस्यते) स्तूयते ॥ ६ ॥

## भाषार्थः

सिन्धु देवता सुखदाता अश्ववान रथ को जोड़ता है वह उस रथ के द्वारा अन्न को दो इस अजेय यशस्वी महान सिन्धु देवता की महिमा इस यज्ञ में स्तुत - की जाती है ॥ ६ ॥ (पर्वतानां मंत्रः)

अपहत रक्षसो भंगुरावतः स्कभायत निर्ऋतिं सेधता मतिं । आनो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ७ ॥

हे (अद्रयः) गोवर्धनादयो यूयं (भंगुरावतः) भंजकेन कर्मणा तद्वतः (रक्षसः) राक्षसान् (अपहत) विनाशयत (निर्ऋतिं) पाप देवतां (स्कभायत) दूरे परि हरत तेषां (अमतिं) (सेधत) निषेधत (नः) अस्माकं (सर्ववीरं) बहुपुत्राद्युपेतं (रयिं) धनं (आसुनोतन) (देवाव्यं) देव प्रीणनं (श्लोकं) (भरत) संपादयत ॥ ७ ॥

## भाषार्थः

हे गोवर्धनादि पर्वतो भंजक कर्म वाले राक्षसों को मारो पाप देवता को दूर करो अबुद्धि को रोको बहु पुत्र धन को हमें दो देवता के तृप्त करने वाले यश को संपादन करो ॥ ७ ॥ (अश्वत्थमंत्रः अथर्व ३।६।६)

यथाश्वत्थ वानस्पत्यानारोहन्कृणुषेऽधरान् एवा मे शत्रोर्मूर्धानं विष्वग्भिन्धि सहस्वच ॥ ८ ॥

## भाषार्थः

हे अच्चन्य वृक्षाभिमानी देवता जिस प्रकार तुम दूसरे वृक्षोंपर चढ़ते उनको नीचा करते हो इसी प्रकार बल करो और हमारे शत्रुके मस्तकको नोड़ो ॥ ८ ॥

शाला या मंत्रो अथर्व ३।१२।२-६

इहैव ध्रुवाम्प्रतिं तिष्ठ शाले ऽश्वावती गोमती सूनृतावती ऊर्ज्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥ ९ ॥

भाषार्थः

हे शालाभिमानी देवता घोड़ा गोधन अन्न दुग्धरसवती तुम यहां ही अचला रहो और महान ऐश्वर्य के लिये ऊंची हो ॥

ऋतेन स्थूणामधिरोह वंशोग्रो विराजन्नप वृङ्क्ष्व शत्रून् मा ते रिषन्नुपसत्तारो गृहाणां शाले शतं जीवेम शरदः सर्ववीराः ॥ १० ॥

भाषार्थः

सत्य द्वारा स्थूणपर चढ़ो महान वंश में बिराजमान होती शत्रुओं को मारो हे शाले तेरे गृह में वास करने वाले नाश को मत पाओ पुत्र पौत्र आदि से युक्त हम पूर्ण आयु तक जीवें ॥ १० ॥

(दिग्पालानां मंत्रः अथर्वः १।३१।१)

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम ११ ॥

भाषार्थः

हम प्राणियों के अध्यक्ष दिशाओं के दिग्पाल चारों देवता के लिये इस हवि को देते हैं ॥ ११ ॥ शंखस्य मंत्रः अथर्वः ४।१०।११

सनो हिरण्यजाः शङ्खः कृशनः पात्वंहसः यो

अग्रनो रोचना नां समुद्रा दाधि जज्ञिषे १२

भाषार्थः

वह ब्रह्मज्योति से उत्पन्न ज्योतिर्मय शंखाभिमानी देवता हम को पाप-

से रक्षा करो जो तुम रत्नों से प्रथम समुद्र से उत्पन्न होने हो॥१२॥

शङ्खेन हत्वा रक्षांस्यत्त्रिणो विषहा म हे शंखे

ना मींवा मर्मतिं शङ्खेनोत सदान्वाः शङ्खेनोवि

श्वभेषजः कृशनः पात्वंहसः१३

भाषार्थः

हम शंख द्वारा राक्षसों को मारकर जय पाते हैं शंख से रोग को और ज्योति-

र्मय शंख द्वारा अज्ञान को नाश करते हैं विश्व की औषधि रूप शंख हम को

पापसे रक्षा करो॥१३॥

(ओषधेर्मन्त्रः अथर्व ४।१८)

अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् यां क्षे

त्रेचक्रुर्यां गोषु यां वाते पुरुषेषु॥१४॥

भाषार्थः

मैंने इस औषधि के द्वारा सब कृत्याओं को निवारण किया जिनको उन-

शत्रुओं ने हमारे क्षेत्र गौ वा पुरुषों पर चलाया॥१४॥

तिस्रो दिवस्तिस्रः पृथिवीः षट् चेमाः प्रदिशः

पृथक् त्वयाहं सर्वा भूतानि पश्यानि देव्योषधे१५

अथर्व ४।२०

भाषार्थः

हे देवि औषधे मैं तेरे द्वारा तीनों स्वर्ग तीनों पृथिवी इन षट् दिशा और-

सब प्राणियों को देखूं॥१५॥

यमस्य मृत्योश्च मंत्रः अथर्व ६।९३॥

नमोऽस्तुते निर्ऋते तिग्मतेजोऽयस्मयान्विचृ
तावन्धपाशान् यमो मह्यं पुनरित्त्वां ददातितस्मै
यमाय नमोऽस्तु मृत्यवे ॥१६॥

भाषार्थः

हे निर्ऋति देवि तुम को नमस्कार यह महा तेजस्वी पाश धारी यम राज देव
ना तुमको मेरे लिये देना है उस यम और मृत्यु के लिये नमस्कार हो ॥१६

सभाया मंत्रः अथर्व ७। १२

विद्मते सभे नाम नरिष्टा नाम वा असि ये ते के
च सभासदस्ते मे सन्तु सवाचसः १७

भाषार्थः

हे सभाभिमानी देवता मैं तेरे नाम को जान्ता हूं तुम अरिष्टा नाम हो आपके
जो सभासद हैं वे मेरे सह वक्ता होवें ॥ १७॥

गृहाणां मंत्रो अथर्व ७।६०

उपहूता भूरिधना सखायः स्वादुसंमुदः अक्षु
ध्या अतृष्यास्त गृहा मास्मद्बिभीतन १८

भाषार्थः

हे गृहाभिमानी देवताओ आव्हान किये हुए तुम बहुधनी स्वादन्न से सं
मोदित क्षुधा पिपासा से रहित हो हमारे पुत्र आदि को भय मत दो ॥१८

इहैव स्त मानु गात विश्वा रूपाणि पुष्यत ऐष्या
मि भद्रेणा सह भूयांसो भवता मया ॥१९॥

इत्यादि बहवो मन्त्रास्सन्ति विस्तर भयान्न लिखिताः

भाषार्थः

यहां ही रहो मेरे अनुगामी मत हो सब रूपों को पुष्ट करो में कल्याण सहि-

न अक्रम मेरे साथ फिर वड़ धनी होंगे ॥१९॥ इत्यादि वहुत मंत्र हैं यहां विस्तार भयसे नहीं लिखे ॥

इति श्री भृगुवंशावतंस श्रीनाथूराम सूनुज्वालाप्रसाद शर्म संगृहीते मूर्त्ति रहस्ये देवानां मंत्र कथनो नाम षष्ठोऽध्यायः ॥६॥

## अथ सप्तमोध्यायः

यज्ञे मृन्मयमूर्त्तेः प्रतिष्ठा पूजन प्रायश्चित्ता दीनि ॥

उभयंवाऽएतत्प्रजापति र्निरुक्तश्चानिरुक्तश्च परिमितश्चा परिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्यतेनसंस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तम परिमितꣳ रूपंतदस्यतेन संस्करोतीति ब्राह्मणं श० १४।१।२।१८

का. अ. ब्रा. मं.

## भाषार्थः

यज्ञ में मृन्मय मूर्त्ति की प्रतिष्ठा पूजन प्रायश्चित्त आदि

परमेश्वर दो प्रकार का है निरुक्त १ अनिरुक्त २ परिमित १ अपरिमित २ इस कारण जो कर्म यजु मंत्र से करता है उसके द्वारा परमेश्वर के उस रूप का संस्कार करता है जो कि निरुक्त और परिमित नाम है और जो तूष्णीं भाव संपन्न है अर्थात् मंत्र में अध्यात्म अर्थ का ही मनन करता है उससे परमेश्वर के उस रूप का संस्कार करता है जो कि अनिरुक्त और अपरिमित नाम है श० १४।१।२।१८॥

कथं साकारोभवतितस्यप्रमाणम्

मायायां विष्णोस्तेजः पपात तत्पतित्वा सावादित्यो ऽभवद्घेनरः प्राङ्देवम्यादृज्यतत द्घ हृङ्ङित्यपतत्तस्माद्घर्मोऽथयत्प्राहृज्यततस्मात्प्रवर्ग्य इति

ब्राह्मणं श० १४। १। १। १०

भाषार्थः

साकार कैसे होता है उस का प्रमाण

माया में विष्णु का तेज गिरा वह विराट् का आत्मा सूर्य हुआ घर्म और प्रव-र्ग्य भी उसके दो नाम हुए श० १४। १। १। १०॥

मूर्त्ति निर्माण विधिः

यन्तस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवी ऽ अगच्छद्यन्मृदियं तद्यदापो ऽ सौ तन्मृदश्चापांच महावीराः कृता भवन्ति तस्मान्मूर्त्तिनिर्माणाय मृत्पिण्डं परिगृह्णाति तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोतीति ब्राह्मणं १४। १। ३। ९। तस्य मंत्रः

भाषार्थः

मूर्त्ति निर्माण की विधिः

वैष्णवी तेज माया में गिरा उस समय कुछ दीप्ति रूप रस पृथिवी स्वर्ग में व्याप्त हुआ जिस को जल और मिट्टी कहते हैं और इन्हीं दोनों वस्तु से महावीरों की मूर्त्ति वनाते हैं इस कारण मूर्त्ति वनाने के लिये मृत्पिण्ड को लेता है मानो उस पूर्वोक्त ज्योति रूप रस से ही इस को समृद्धि युक्त और परिपूर्ण करता है श० १४। १। २। ९॥

देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ यजु० अ० ३७ मं० ३

पदार्थः

हे (देवी) देव्यौ (द्यावा पृथिवी) मृज्जले (अद्य (पृथिव्याः) (देव यजने) देव यजन स्थाने (वाम्) युवां मृज्जले ऽआदाय (मखस्य) (शिरः) महा वीरस्य मूर्त्ति (राध्यासम्) साधये यं (मखाय) यज्ञाय (त्वा) त्वां गृह्णामि (मखस्य) (शीर्ष्णो) महा बीराय (त्वा) त्वां गृह्णामि ॥ ३ ॥

## भाषार्थः

हे मृद्जल रूप देवि अो अब देव यजन स्थान में तुम दोनोंकोलेकरमहा वीरकीमूर्त्तिकोसाधन करूं में यज्ञ के लिये तुझे लेता हूं और महावीर के लिये तुझे लेता हूं ॥ ३ ॥

एनावाऽ एनदकुर्वन यथा यथैतद्यज्ञस्य शिरोऽ छिद्यत तस्मान्मूर्त्ति निर्म्माणाय तां वल्मीक वपां परि गृह्णाति नाभि रे वैचमेतद्रसेनसमर्धयनिकृत्स्नं करोतीति ब्राह्मणं श० १४।१।२।१० तस्य मंत्रः देव्यो वम्र्यो भूतस्य प्रथमजा मखस्य वोऽद्य शि रो राध्यासन्देव यजने पृथिव्याः मखा यत्वामख स्यत्वा शीर्ष्णो य० अ०३७ मं० ४

## पदार्थः

हे (भूतस्य) प्राणि जातस्य (प्रथमजाः) प्रथमोत्पन्नाः (देव्यः) (वम्र्यः) उपजिह्वकाः (वः) युष्मानादाय (पृथिव्याः) (देव यजने) (मखस्य) (शिरः) महा वीरं (अद्य) (राध्यासम्) सम्पादयेयं शेषं पूर्ववत् ॥ ४ ॥

## भाषार्थः

माया में वैष्णावी तेज गिरने का कारण वल्मीक वपा (वमई की मिट्टी)

हुई इस कारण उसको लेना है और उससे महावीर की मूर्त्ति को समृद्ध और परिपूर्ण करना है यह ब्राह्मण वाक्य हुआ श० १४।१।२।१० इसके मंत्र का अर्थ यह है—हे प्राणियों से प्रथम उत्पन्न देवी उपजिह्वका आे तुम को लेकर देव यजन स्थान में अब महा वीर की मूर्त्ति को संपादन करूं मैं यज्ञ के लिये तुझे लेता हूं महावीर के लिये तुझे लेता हूं ॥ ४ ॥

इयती ह वा॒ऽइयम॒ग्रे पृथि॒व्या॒स प्रादेशमात्रीता
मे मूष इति वराह उ॒ज्जघान॒ सो॒ऽस्याः प॒तिः प्रजा॒
पतिस्तस्मान्मूर्त्ति निर्म्माणाय वराह विहितं मृदं परि
गृह्णाति ते॒नै॒वैनमे त॒न्मिथुने॒न प्रिये॒ण धा॒म्ना स॒म
र्धयति कृत्स्नं॒ करोतीति ब्राह्मणं श० १४।१।२।११।

तस्य मन्त्रः

इ॒यत्यग्र॑ आसीन्मुखस्य॒ तेऽद्य शिरो राध्यासन्देव॒
यजने पृथि॒व्याः म॒खाय त्वा म॒खस्य त्वा शी॒र्ष्णे॑
यजु० अ० ३७ में ५—

पदार्थः (अग्रे) आदौ वराहोद्धरण समये पृथिवी (इयती) एतत्प्रमाणप्रादेश मात्री (आसीत्) हे पृथिवि (अद्य) (ते) (पृथिव्याः) (देव यजने) (मखस्य) (शिरः) महा वीरं (राध्यासम्) (मखाय) (त्वा) त्वां गृह्णामि (मखस्य) (शीर्ष्णे) महावीराय (त्वा) त्वां गृह्णामि ॥ ५ ॥

## भाषार्थः

सृष्टि के आरम्भ काल में यह पृथिवी प्रादेश मात्री थी उसको श्री वाराह जी ने ऊंचा उठाया वे वाराह जी इस पृथिवी के पति और प्रजा के स्वामी हैं इस कारण उस प्रिय धाम मिथुन के द्वारा महावीर

को समृद्ध और परि पूर्ण करता है यह ब्राह्मण वाक्य हुआ १४।१।२।११।
उसके मंत्र का अर्थ यह है—
आदि में अर्थात् वाराह अवतार के समय यह पृथिवी मादेश मात्री थी हे पृथिवि अवनेरे देव यजन स्थान में महा वीर की मूर्त्ति को सम्पादन करूं हे वराह विहिन मृत् यज्ञ के लिये तुझे लेता हूं महावीर की मूर्त्ति के लिये तुझे लेता हूं॥५॥

सुरभयः पूतीका यज्ञस्य हिरसात्सम्भूता स्तस्मा न्मूर्त्ति निर्म्माणाय ताः परि गृह्णातीति ब्राह्मणं श० १४।१।२।१२ तस्य मन्त्रः
इन्द्रस्यौजस्स्थ मखस्य वोऽद्य शिरो राध्या सन्देव यजने पृथिव्याः मखाय त्वा मखस्य त्वा शीर्ष्णे यजु० अ० ३७ मंत्र ६

पदार्थः हे पूतीका यूयं (इन्द्रस्य) परमेश्वरस्य (ओजः) तेजो रूपाः (स्थ) (वः) युष्मानादाय (पृथिव्याः) (देवयजने) (मखस्य) (शिरः) महावीरं (राध्यासम्) (मखाय) (त्वा) त्वां गृह्णामि (मखस्य) (शीर्ष्णे) महावीराय (त्वा) त्वां गृह्णामि॥६॥

### भाषार्थः

सुगंधित पूती का वैष्णव तेज से उत्पन्न हुई इसकारण मूर्त्ति निर्म्माण के लिये उन को लेना है यह ब्राह्मण वाक्य हुआ १४।२।१।१२॥
अब मंत्रार्थ को कहते हैं— हे पूती काओ तुम परमेश्वर के तेज रूप हो तुम को लेकर देव यजन स्थान में महावीर को संपादन करूं यज्ञ के लिये तुम को लेता हूं महा वीर के लिये तुम्हें लेता हूं॥६॥

यत्तस्य शीर्षं छिन्नस्य भुगुदक्रा मन्नतो ऽजासम
भवत्तस्मादजाक्षीरं परि गृह्णाति तयैवेन मेतच्छु
चासमर्धयति कृत्स्नं करोतीति ब्राह्मणं श० १४।
१।२ तस्य मन्त्रः
मखाय त्वा मखस्य त्वा शीर्ष्णे- यजु० अ० ३७ मं० ७

भाषार्थः

जब वैष्णावी तेज माया में गिरा तब उसकी दीप्ति से अजा उत्पन्न हुई उस कारण अजा के दुग्ध को लेता है और उस दीप्ति से महावीर को समृद्ध और परिपूर्ण करता है यह ब्राह्मण वाक्य है श० १४।१।२॥

मन्त्रार्थ यह है- हे अजा के दुग्ध यज्ञ के लिये तुझे ग्रहण करता हूं और महावीर के लिये तुझे ग्रहण करता हूं॥७॥

सर्वानेवास्मा ऽ एतद्देवानभि गोप्तॄन्करोतीति
ब्राह्मणं श० १४।१।२।१५ तस्य मंत्रः
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता अच्छा वीरन्न
र्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तु नः यजु० अ०
३७ मंत्र ८

पदार्थः (ब्रह्मणस्पतिः) वेदस्य पालकः (प्र) महानाराय णः (अच्छ) अभिमुखं (प्रैतु) (सूनृता) सत्यस्वरूपा (देवी) महालक्ष्मीः (प्रैतु) (देवाः) (नः) अस्माकं (नर्यम्) नरस्य परमेश्वरस्य मूर्त्तिरूपं (पंक्तिराधसं) इन्द्रियपंक्तिभिः समृद्धं (यज्ञं) यज्ञपुरुषं (वीरम्) महावीरं (नयन्तु) स्वकीय शक्तिं प्रापयन्तु॥८॥

भाषार्थः

सब देवताओं को मूर्त्ति का रक्षक करता है यह ब्राह्मण वाक्य है श०१४।१ २।१५ मंत्र का अर्थ यह है - वेद का रक्षक महानारायण और सत्य स्व रूपा देवी लक्ष्मी ज्ञान दृष्टि का गोचर हो वें देवता हमारे इष्ट देव की मू र्त्ति रूप इन्द्रिय पंक्तियों से समृद्ध यज्ञ पुरुष रूप महा बीर को अपनी शक्ति प्राप्त कराओ॥ ८॥

पयआदि सम्भार समूहं गृह्णाति तस्य मंत्रः

मखायत्वा मखस्यत्वा शीर्ष्णे यजु: अ० ३७ मं० ८

भाषार्थः

दुग्धआदि सम्भार समूह को ग्रहण करता है उसके मंत्र का अर्थ स्प ष्ट है॥

अथ मृत्पिण्डमुपादायत्रीन्महावीरान्करोति प्रा देशमात्रं मध्ये संगृहीतमथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधातीति ब्राह्मणं श० १४।१।२।१७ तस्य मन्त्रः

मखायत्वा मखस्यत्वा शीर्ष्णे यजु: अ० ३७ मं ८

भाषार्थः

मृत्पिण्ड को लेकर महावीर की तीन मूर्त्ति बनाता है जोकि प्रादेश मात्र और मध्य में संगृहीत हो फिर मुख और नासिका को उसमें धारण करता है यह ब्राह्मण वाक्य हुआ श० १४।१।२।१७ अब मंत्र को कहते हैं- हे मूर्त्ति श्री यज्ञ के लिये तुम को निर्माण करता हूं महावीर के लिये तुम को बनाता हूं॥ ८॥

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एना ओष धयोजज्ञिरे ताः परि गृह्णाति तेनैवैनमेतद्रसेनस

मर्धयति कृत्स्नं करोतीति ब्राह्मणं श० १४।२।२

१९ तस्य मन्त्रः

मुखाय त्वा मुखस्य त्वा शीर्ष्णे ८

भाषार्थः

जब वैष्णवी तेज माया में गिरा तब कुछ रस रूप तेज फैला उससे ओष-
धियां उत्पन्न हुईं उनको ग्रहण करता है और उसी रस से महावीर को
समृद्ध और परिपूर्ण करता है यह ब्राह्मण का वाक्य हुआ श० १४।२।२
।१९ अब मन्त्रार्थ को कहते हैं-
हे ओषधे यज्ञ के लिये तुझे ग्रहण करता हूं महावीर के लिये तुझे ग्रहण
करता हूं॥ ८॥

अथैनान्महावीरान्धूपयतीति ब्राह्मणं श० १४।२।२।२० तस्य मन्त्रः

अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः ९

पदार्थः हे महावीर (पृथिव्याः) (देवयजने) (वृष्णः) धर्मा
र्थ काम मोक्षैः सेक्तुः (अश्वस्य) महानारायणस्य। असौ
वा आदित्य एषोऽश्वः श० ६।३।१।२९ सूर्यो वै सर्वे देवाः
श० १३।७।१।१५ (शक्ना) भोगोच्छिष्टेन यथाहाथर्वः॥

शर्कराः सिकता अश्मान ओषधयो वीरुधस्तृ
णा। अभ्राणि विद्युतो वर्ष मुच्छिष्टे संश्रिता श्रिता
यच्च प्राणति प्राणेन यच्च पश्यति चक्षुषा उच्छिष्टा
ज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ११।७ (त्वा)
त्वां (धूपयामि) ९

भाषार्थः

महावीरों को धूप देता है यह ब्राह्मण वाक्य हुआ १४।२।२।२० अब

